श्रीगणेशायनमः॥ वास्तुमंडलं लिख्यते॥ तत्रकारिका॥ प्रागुक्तगृहप्र
वेशादिनात्॥ पूर्वेन्हिः धृर्वान्हिसस्त्रिकः शुचिः प्राङ्मुखः। प्राणानायम्य
देशकालौ स्मृत्वा॥ गृहारंभादौ अस्यवास्तोः शुभतासिध्यर्थं नवगृह
मखं वास्तुशांतिं करिष्ये इति संकल्प्य॥ तदंगत्वेन गणेशपूजनपुण्या
हवाचनमातृकापूजनं नांदीश्राद्धं आचार्यादिवरणादीनी करिष्ये इ
ति संकल्प्य॥ तानिकृत्वा। आचार्यादीन् अलंकारवस्त्रादिभिः संपूज्य॥
ऋत्विजः चत्वारः अत्रआचार्यः कर्मकरिष्ये इति संकल्प्य। गौरसर्षपान्
विकीरयेत्॥ यदत्रसंस्थितं भूतं०। अपक्रामंतु भू०। भूतप्रेतपिशाचा
द्या०। अपक्रामंतु भूतानि राक्षसाः स्थानादस्माद्व्रजतं न्यत्र स्वीकरो
मि भुवं चिमां सितिः॥ ततो गायत्र्या गोमूत्रं। गंधद्वारा इति गोमयं। आ

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

प्यायेति श्विरं। दधिक्राव्णो। निदधि। इदं तं मिमि क्षेतिष्टतं। आपो हिष्ठे
ति कुशोदकं चैकत्रादाय प्रणवेनालोड्य कुशैः मार्जनं कृत्वा। शुचीवोह
व्येतित्वेन। रक्षोहणेति मंत्रेण। सर्वं गृहादि प्रोक्षयेत्॥ ततो गृहा
दौ यजमानैक हस्तमितं चतुरस्रं समो नितिमेखलं कुंडं चतुरंगुलो
त्सेधं उलं वा विधाय। तत्पूर्वतश्चतुरंगुलोन्नतं हस्तमितं वेदिद्वयं
२ मृदा विधाय उत वेद्याः॥ ईशानादि कोणचतुष्के चतुरः शंकून्। ॐ वि
शंतु भूतले नागाः लोकपालाश्च सर्वतः। अस्मिन्गृहे वतिष्ठंतु आ
युर्बलकराः सदा इति मंत्रेण रोपयेत्। प्रतिरोपण मंत्रावृत्तिः।
एवमग्रेपि प्रासादादौ गृहपदेन तन्नामोहनीयं। एवं प्रासादे २
पीति सर्वतिरोति देशातु॥ ततो रोपणक्रमेण शंकुपार्श्वे माश भक्त

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

बलीन्॥ ॐ अग्निभ्योप्यथ सर्पेभ्यो येचान्ये तत्समाश्रिताः। तेभ्यो बलि
प्रयच्छामि पुण्यमोदनमुत्तमं मिति दद्यात्॥ ततो वेद्योपरि स्वस्त्रे कुंकु
मादीनां सुवर्णरजतादि शलाकया। शांताय॰ शोचति॰ कांता॰ वि
शाला॰ प्राणवाहिनी॰ सति॰ सुमति॰ नंदा। सुभद्रा॰ सुरथा इत्यों
कारादि नमोंतानामभिः पश्चारभ्य प्रागग्राः। उदक्संस्थाः। समाअं
३ गुलद्वयांतरा दशरेखाः कृत्वा। पुनः। हिरण्या १ सुव्रता २ लक्ष्मी ३ वि
भूति ४ विमला ५ प्रिया ६ जया ७ बला ८ विशोका ९ इडा इति नामभ
भिः तथैव दक्षिणारंभाः उदगग्राः प्राक्संस्थाः प्राक् दशरेखाः कृ
त्वा। कुंडे स्थंडिले वा। भुवं संस्कृत्य अग्निं प्रतिष्ठाप्य॥ षोडशोप
चारैः संपूज्य। तदीशान्यां कलशं संस्थाप्य। वास्तुमंडलं गत्वा तत्रेशा
नकोणपदे [illegible] ततः। प्रणवा

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

दिनमीता: नामभिर्मंत्रै: रावाहयेत। अत्र ईशानकोणपदे वास्तो: शिर
सि ॐ शिखिने नम: । शीखिनमावाहयामि इति स्थापयेत् १ एवमग्रे
पि। दक्षिणैकपदे दक्षिणमंत्रे पर्जन्याय नम: २ दक्षिणपदे तत्पश्चि
मदेशे दक्षिणश्रोत्रे जयंताय नम: ३ दक्षिणपदद्वये दक्षिणांशे कु
लीशायुधाय नम: ४ दक्षिणबाहू सूर्याय नम: ५ दक्षिणबाहवे सत्या
य नम: ६ दक्षिणकूर्पे भृशाय नम: ७ दक्षिणोपरिस्थैर्यपदे दक्षिण
प्रबाहौ आकाशाय नम: ८ तद्दक्षिणाग्नेयकोणपदे दक्षिणबाहवे
पापाय नम: ९ तत्पश्चिमैकपदे दक्षिणमणिबंधे पूष्णे नम: ॥ १० त
त्पश्चिमपदे तदुत्तरपदे च वितथाय नम: ११ तत्पश्चिमपदद्वये दक्षि
णपार्श्वे गृहक्षताय नम: १२ तत्पश्चिमदक्षिणे यमाय न० १३ तत्पदद क्षि
णजानौ गंधर्वाय नम: १४ तत्पश्चिमजंघायां भृंगराजाय नम: १५

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

तत्पश्चिमस्थैकपदे दक्षिणस्य चिमृगाय १६ तत्पश्चिमनैरृत्यकोणे
पदे पादयोः पितृन् १७ तदुत्तरैकपदे रामस्थ चिदौवारिकाय नमः १८
तदुत्तरपदे तत्प्राकदेशे वामजंघायां सुग्रीवाय १९ तदुत्तरपदद्वये वा
मजानौ पुष्पदन्ताय नमः २० तदुत्तरपदद्वये वामोरौ वरुणाय नमः २१ त
दुत्तरपदद्वये वाम पार्श्वे ~~शेषाय नमः~~ २२ असुराय नमः २२ तदुत्तरपद
द्वये वामपार्श्वे शेषाय नमः २३ तदुत्तरे परिस्थैकपदे वामभागे वंधे पाप
यनमः २४ तदुत्तर वायव्यकोणपदे वामबाहु रोगाय २५ तत्प्रागेकपदे
वामपार्श्वे अहिर्बुध्न्याय २६ तदुत्तरोपरिस्थैकपदे वामकुर्परे मुख्या
य २७ तत्प्राकपदद्वये वामबाहौ भल्लाटाय २८ तत्प्रागपदद्वये वामबाह
वे सोमाय २९ तत्प्राकपदद्वये वामांसे सर्पाय ३० तत्प्राकपदद्वये वाम

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

श्रोत्रेअदित्यैन०२१ तद्भागुपरिस्थैकपदे वामनेत्रे दित्यैन २२ तद्दक्षिण
शिखिपादाधःकोणपदे मुखे अपां २३ आग्नेयवायुकोणाधःको
णपदे दक्षिणहस्ते सवित्राय०२४ नैरृत्ये पितृपादाधकोणपदे ज
पाय०२५ वायव्ये रोगपादाधकोणे पदे वामहस्ते रुद्राय०२६ मध्ये
शानकोणपदे दक्षिणपदत्रये दक्षिणहस्ते अर्यम्णे०२७ दक्षिणा
ग्नेयैककोणेपदे दक्षिणहस्ते सवित्रे २८ तत्पश्चिमपदत्रये ज
ठरदक्षिणभागे विवस्वते २९ तत्पश्चिमनैरृत्यकोणपदे वृष ३
णायोः विबुधाधिपाय०३० तदुत्तरवायव्यकोणपदे वामहस्ते रा
जयक्ष्मणे०३१ तदुत्तरप व श्र [illegible] पदे जठरवामभागे मित्राय०३२
तद्भागपदत्रये वामहस्ते पृथ्वीधराय०३३ तद्भाग ईशानकोणप

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

देउरसिआपवत्स्थाय॰४४मध्येनवपदेषुनाभोवास्तुपतेयेत्रह्माणं

श्मांतदुत्तरेवृषवास्तुवास्तोष्पतेवशिष्ठोवास्तोष्पतिस्त्वष्टप्रवास्तो

ष्पतिमंत्रेणस्थापयेत्॥ततःसुवर्णस्यरौप्यस्य॰ततोमंडलस्यवहि

रेशानाग्नेनैर्ऋतवायव्येकोणेषुक्रमेणचरकीविदारीपूतनापापराक्ष

सिंपूर्वादिक्षुक्रमेणस्कंदमर्यमाजंभकंपिलिपीच्छप्राग्वनाममंत्रैः

संस्थाप्यतदस्त्वित्यावाह्यआसनाद्युपचारैःप्रत्येकमेष्ठत्रवाकां

डानुसमयनपदार्थानुसमयेनवाऽथचमंडलादीशान्यांमकालक्रम

मर्णंकलशंसंस्थाप्यतत्रदिव्योशधियवदुर्वापिंचपल्लवसमभृत्तिकाफ

लपंचरत्नानिप्रक्षिप्यवस्त्रेणाभिवेष्ट्ययवपूर्णपात्रंनिधाययवकृए

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

मावाह्य तत्र तिथ्यन्विता आह्वयेत्॥ ततः आचार्योऽग्न्याधानं कुर्यात्॥ तत्र
चक्षुषी आज्येनेत्यंतमुक्त्वा॥ नवग्रहानमुकसंख्याभिः॥ समिद्भिः ति
लाज्याहुतिभिश्च अधिदेवताविनायकादि अमुकसंख्यादिभिस्तस्स
मितिलाज्याहुतिभिः सिख्यादि पंचचत्वारिंशद्देवताः अमुकसंख्या
भिः समितिलपायसाज्याहुतिभिर्वा सुंवास्तोष्पत इति चतसृभिः॥ स
मितिलपायसाज्याहुतिभिः ऋग्भिः क्रमेणामुकसंख्याभिः वास्तुपास्तो
ष्पत इति पंचभिः ऋग्भिः क्रमेण अमुकसंख्याभिः बिल्वैस्तद्बीजैर्वा च
रव्यादि अमुकसंख्यासमिदाद्विचतुराहुतिभिः॥ इति प्रधानदेवता
संकीर्त्य शिवेनास्विष्टकृतमित्यादि उक्तासमीधो जुहुयात् ततः प्रणी ८
ताप्रणयनांतं कृत्वा॥ शिख्यादिदेवताभ्यः प्रत्येकममुमेत्त्वेति ने

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

रूप्याग्न्यवनातेकुर्यात्॥ ततोयजमानोग्नेर्दक्षिणतउपविष्टःसर्वा
देवताःद्रव्याणिवासंकीर्त्यएभ्यएतान्युत्सृजेतनममेत्येकदेवत्या
गंकुर्यात्॥ बहुदेवत्येचकैकेभ्यइतित्यागस्यक्रमशश्चासा
त्॥ आचार्यइध्माधानादिकृत्वाप्रधानहोमंस्वचैःकुर्यात्॥ तत्रद्रव्या
णांसंख्याउच्यते॥ नवग्रहेभ्यःक्रमेणअर्कपालाशखदिरअपामार्गा
5 श्वपिप्पलःउदुम्बरशमीदूर्वाकुशाश्चसमिधःस्मृताः॥ प्रत्येकंम [illegible] शतं
अष्टाविंशतिअष्टौवाप्रादेशमात्रा॥ सर्वसंख्याश्चतिलाहुतीर्जुहुयात्॥
ततःमैत्रेः॥ यदातस्यचरुरपितदाप्याहुतिसंख्यासेवकोमैत्रेयकेकाहुति
स्त्याहुः॥ ततोधिदेवताप्रत्यधिदेवताविनायकादिभ्यःसप्तग्रहसमिधः॥
पलाशोवाग्रहमष्टपक्षेएताभ्यःश्चतस्रइतिशिष्टाः॥ अत्रतिस्त्रमिद्

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

वीभिरेकाहुतिरितिसंख्यासंकार्यः।।कुशेषुतुत्रिपत्रःसौकोति।।ततःसि
ख्यादिभ्यः प्रागुक्तप्रणवादिस्वाहांतानामभिः प्रत्येकमष्टसहस्त्रमष्ट
शतमष्टाविंशतिरष्टौ वाहुति समित्तिलपायसाज्यैर्जुहुयात्।।अत्रसमि
धउदुंबरस्यमुख्याः।।तदलाभेश्वत्थादीनामपीसर्वासांसमिद्धोमधुघृत
दधिभिःमधुघृतक्षीरैर्वाआक्तांहोतव्याः।।तिलाःकृष्णाएवपयोगौरेव
केचित्तिलेषु~~चतसृभिः~~ यवानाहुः।।ततोवास्तवेवास्तोष्पतइतिचत
सृभिःसमित्तिलपायसाज्याहुतिर्जुहुयात्।।ततोवास्तवेवास्तोष्पत
इतिचतसृभिःवास्तोष्पतेध्रुवेतिचप्रत्यृचं नैकेकं वाघृताक्तं बिल्वं
जुहुयात्।।वास्तोष्पतइतिचसृणांवशिष्ठोवास्तोष्पतिस्त्रीष्टुप्भोस्या
गापत्रिहोमेविनियोगः।वास्तोष्पतिध्रुवास्थूणांसीवरीवीठोवास्तो

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

ष्पतिर्हली॥ होमेविनियोगः॥ ततश्चरक्यादिभ्योमुख्यन्यूनसंख्या
याचत्वारिंद्रव्याणिजुहुयात्॥ मुख्येभ्योष्टसंख्यप्रयमंत्रेचेत्तुःसंख्य
त्वमितिशेषः॥ एतानिसर्वाणिद्रव्याणिहस्तेनैवहोतव्यानिततःस्वि
ष्टकृतादिप्रायश्चित्तहोमांतंकृत्वा॥ इंद्रादिदिक्पालेभ्योगृहेभ्यश्चसदी
पमाषभक्तबलिंदत्त्वा॥ स्रुच्याद्वादशगृहीतंवाकृत्वानारिकेलादिफ
लंतत्रसंस्थाप्यमूर्धानमितिपूर्णाहुतिंजुहुयात्॥ मूर्धानंदिवोभारद्वा
6 जोवैश्वानरःत्रिष्टुप्॥ ततोप्रणीताप्रणयनादि॰मशेषंसमाप्य॥
वास्तुमंडलपश्चिमदेशेशिखिनेएषपायसबलिर्नममेत्येवंशिख्या
दिभ्योबलीन्दद्यात्॥ तान्विप्रेपायसेनक्षयादौवक्ष्यमाणैःपक्वैस्त
द्पत्रावेपायसेनेति॥ ततःश्चरक्यादिभ्योस्तथैवमाषभक्तंबलिंद

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham

धात्॥ततः आचार्यादयः समुद्रज्येष्ठा इत्यादिवैदिकैः मंत्रैः सुरास्त्वे-
त्यादिपौराणैः श्च मंत्रैः यजमानं सपत्नीकं शांतीकलशोदकेनाभिषिच्य।
सर्वौषधिभिरानुलिप्य स्नापयेयुः॥ततः आचार्यो ब्रह्मस्थाने सुरूपां भू-
षितां स्त्रिरूपां पृथ्वीं ध्यात्वा॥ॐ धरायै नम इति मंत्रेण संपूजयेत्॥स-
र्वदेवमयं वास्तु वास्तुदेवमयं परमिति॥ततो गृहं प्रागादिक्रमेण सूत्रा-
पावमानेन सूक्तेन राक्षोघ्नेन च वेष्टयेत् अष्टत्रैः छिन्नसूत्रैः शुभं ततो दु-
ग्धपूर्णया वसंस्त्रन कुंभ्या जलपूर्णया च सस्त्रनकुंभ्या तेथै वस्त्रसूक्ते द्व-
येन धाराद्वयं मव छिन्नं कुर्यात्॥अथ यजमानो गृहस्याग्नेये आकाशप
देशानुदग्घ्नमवटं खनित्वा तं गोमयेनोपलिप्य शुक्लचंदनपुष्पाक्षता-
दिभिः ... श्यात्यादि सप्तबीजानि दध्योदनेन च प्रक्षिप्य नवकुंभ

CC-0. Lal Bahadur Shastri University, Delhi. Digitized by Sarvagya Sharada Peetham